मलमूत्रपरिक्लिन्नं यदङ्गं तत्र सौभगम् ।
पश्येच्चेत् कुत्र नो पश्येत् सौन्दर्यं तन्ममेरय ॥७६॥
तस्मात् सौन्दर्यमेतद्वै राजपुत्र निशामय ।
अभिमानमृते नैष सुखहेतुर्भवेत् क्वचित् ॥७७॥
क्षौद्रमाधुर्यवद्देहे सौन्दर्यं सहजं यदि ।
तद्बालानां कुमाराणां कुतो नो भाति तद्वद ॥७८॥
देशभेदेषु दृश्यन्ते विविधाकृतयो नराः ।
एकपादैकनयना लम्बकर्णा हयाननाः ॥ ७९ ॥
कर्णप्रावरणाः फालवक्त्रा निर्गतदंष्ट्रकाः ।
विनसा दीर्घनासाश्च लोमच्छन्ना विलोमकाः ॥८०॥
पिङ्गकेशाः श्वेतकेशाः विकेशाः स्थूलकेशकाः ।
चित्रवर्णाः काकवर्णाः पिङ्गला लोहिताङ्गकाः ॥८१॥
एवं बहुविधा मर्त्याः सजातिवनितासु ते ।
रतिं विन्दन्ति त्वमिव राजपुत्र निशामय ॥८२॥
सुखसाधनभूतेषु मुख्यं यत् स्त्रिवपुःस्थितम् ।

---

ति । क्षिप्तं विक्षिप्तं चेतो येषाम् । जघन्ये निकृष्टे अपानोद्गारधूपिते मूत्रादिक्लिन्ने । क्लिन्ननाडीव्रणसुषिरतुल्ये योन्याद्यङ्गेऽपि । सर्वतो मुखादिभ्योऽधिकम् ॥ ७५ ॥ ७६ ॥ तस्मात् सौन्दर्यस्य मनःकल्पितमात्रत्वात् ॥ ७७ ॥ न क्षौद्रमाधुर्यवत् सौन्दर्यं स्वाभाविकमिति प्रकारान्तरेण सौन्दर्यस्य मानसत्वं साधयति–क्षौद्रेति ॥ ७८ ॥ नास्ति विरूपासु कामिनां रतिः । क्वचिदृश्यमानापि न पूर्णसुखावहेत्याशङ्क्य देशान्तरस्थित्याख्यानेन परिहरति–देशेति ॥ ७९ ॥ ८० ॥ ८१ ॥ निशामय पश्य

सर्वप्रियं यत्र सर्वे मुह्यन्ति विबुधा अपि ॥८३॥
पुंसां वपुस्तथा स्त्रीणां प्रियमत्यन्तसुन्दरम् ।
विमर्शय सुबुद्ध्या त्वं राजपुत्र यथास्थितम् ॥८४॥
मांसलिप्तमसृक्क्लिन्नं शिराबद्धं त्वगाततम् ।
अस्थिपञ्जरकं लोमछन्नं पित्तकफाहितम् ॥ ८५ ॥
मलमूत्रकुसूलं तच्छुक्रशोणितसम्भवम् ।
मूत्रद्वारसमुद्भूतमहो प्रियमिहेष्यते ॥ ८६ ॥
य एवमतिबीभत्से वितन्वन्ति रतिं नराः ।
विट्कृमिभ्यः कुतस्तेषां भवेदन्तरमीरय ॥ ८७ ॥
राजपुत्र तनुरियं प्रिया हि नितरां तव ।
विभावय विवेकेन धातूनाञ्च पृथक्स्थितिम् ॥८८॥
एवमन्यत्रोपयोज्ये मधुराम्लादिषड्रसे ।
परिणामस्वभावन्तु सूक्ष्मदृष्ट्या विभावय ॥ ८९ ॥
भक्षितस्यापि सर्वस्य विड्भावः परिणामके ।
सर्वथा नात्र सन्देहः सर्वैरेव विभावितः ॥ ९० ॥
यदैवं संस्थिते लोके किं प्रियं स्यात् किमप्रियम् ।
इत्युक्तो हेमचूडोऽथ वैरस्यं विषये विदन् ॥९१॥

---

॥ ८२ ॥ शरीरप्रकृतिं वर्णयितुमाह—सुखेति ॥ ८३ ॥ ८४ ॥ पित्त कफाभ्याम् आहितं युक्तम् ॥८५॥ ८६ ॥ ८७ ॥ धातूनां त्वगसृगादीनां पृथक्स्थितिम् । विवेकेन विचारदृशा । विभावय । एवं विभावने क सौन्दर्यादिकमिति भावः ॥ ८८ ॥ एवं शरीरे प्रियत्वं सुखसाधनत्वरूपमस्य भोज्ये निराकरोति—एवमिति । शरीरादन्यत्र । उपयोज्ये भोज्ये ॥८९॥ परिणामस्वभावमे-

श्रुत्वाऽपूर्वं वाक्यजालं विस्मितोऽभवदञ्जसा ।
विचार्य भूयस्तत् सर्वं यदुक्तं हेमलेखया ॥ ९२ ॥
भोगेषु जातनिर्वेदः परं वैराग्यमासवान् ।
अथ क्रमेण पृष्ट्वा तां प्रियां ज्ञात्वा च तत्पदम् ॥९३॥
केवलां चितिमात्मस्थां त्रिपुरामात्मरूपिणीम् ।
बुद्ध्वाऽभवद्विमुक्तात्मा स्वात्मभूताखिलेक्षणः ॥ ९४ ॥
जीवन्मुक्तः समभवत् ततस्तस्यानुजोऽपि हि ।
मणिचूडोऽविदद्भ्रातुर्मुक्ताचूडोऽपि पुत्रतः ॥९५॥
मुक्ताचूडप्रिया चापि स्नुषया ज्ञानमासदत् ।
मन्त्रिणश्चापि पौराश्च बभूवुर्ज्ञानशालिनः ॥९६॥
न तत्र नगरे कश्चिदविद्वान् समजायत ।
आसीद्ब्रह्मपुरप्रख्यं शान्तसंसृतिवासनम् ॥९७॥
विशालनगरं तच्च जगत्यत्युत्तमं बभौ ।
यत्र कीराः शारिकाश्च पञ्जरस्थाः पठन्ति वै ॥९८॥
चितिरूपं स्वमात्मानं भजध्वं चेत्यवर्जितम् ।

---

वाह—भक्षितेति ॥९०॥९१॥ अपूर्वं कदाप्यश्रुतम् ॥९२॥ जातो निर्वेदः अलंबुद्धिः यस्य । परं तीव्रम् । तत्पदम् आत्मपदम्॥९३॥ आत्मस्थां सर्वान्तराम् । आत्मरूपिणीम् प्रत्यग्रूपाम् । स्वात्मभूतमखिलेक्षणं यस्य ॥ ९४ ॥ ९५ ॥ मुक्ताचूडप्रिया हेमचूडमाता । स्नुषया हेमलेखया । उपदिष्टमिति शेषः । परस्परोपदेशेन ज्ञानशालिनः ॥ ९६ ॥ ब्रह्मपुरप्रख्यं सत्यलोकतुल्यम् । संसृतेर्वासना कामक्रोधादि ॥ ९७ ॥ अत्युत्तमत्वे हेतुः—यत्रेति ॥ ९८ ॥ यत् पठन्ति तदाह—चितिरूपमिति । हे जनाः ! वि-

नास्ति चेत्यं चितेरन्यद्दर्पणे प्रतिबिम्बवत् ॥९९॥

---

षयभजनं त्यक्त्वा स्वमात्मानं भजध्वम् । विषयभजनस्य दुःखमूलत्वादिति तात्पर्यम् । कथंविधमात्मानं तदाह—चितिरूपम् । चितिः प्रज्ञानं तदेव रूपं यस्य । नात्र भजनं बाह्यपूजनादिकम् । किन्तु तस्य पूजनमहन्तया या स्थितिरिति नीत्या सोऽहमस्मीति निष्प्रकम्पत्वनिश्चयवत्त्वमेव । तच्चास्माकं देहादिसंघातान्तर्भावो नास्त्येवेति चेदाह—चेत्यवर्जितमिति । चेत्यैर्देहाद्यैश्चित्प्रकाश्यैर्वर्जितम् । कुत एवमिति चेदाह—नास्तीति । चेत्यं देहाद्यं शशशृङ्गादिवन्नास्त्येवेति भावः । शशशृङ्गादिवन्नास्ति चेत् कथं प्रकाशते इति चेत् चितिरेव प्रकाशते नान्यदित्याह—चितेरन्यदिति । चितिरेव चेत् कथं देहाद्यात्मना भानमिति चेदाह—दर्पणप्रतिबिम्बवत् ॥ अत्रेदमागमतत्त्वम् । चितिरेवात्मतत्त्वमिदं प्रत्ययाविषयत्वात् । अन्यदनात्मरूपमिदं प्रत्ययविषयत्वात् । यत्तदात्मतत्त्वं स्मृत्यनुसन्धानानुरोधेनैकमनेकावस्थास्वनुगतं तस्य चितिमात्ररूपत्वेन भेदकधर्माप्रसिद्धात्सुरासुरनृदेहादिष्वप्येकत्वमेव । कालदेशादीनां तदन्तः सर्वात्मना निमग्नानामन्यथा नरशृङ्गकल्पानां न तद्भेदकत्वशङ्कापि युक्ता । एवंविधमनवच्छिन्नचिदेकरसमात्मतत्त्वमेव शास्त्रप्रसिद्धः परमशिवः । तत्स्वातन्त्र्यशक्त्या मायाभिधयाऽघटितघटनाचतुरया स्वस्वरूपगोपनपरया अविद्यात्मकमलावभासनपूर्वकमिदं द्वैतावभासनम् । तच्च भासमानं द्वैतं दृश्यं न बीजादङ्कुरवत् कारणाच्छिन्नादारब्धं नापि मृत्पिण्डपरिणामघटवत् कारणपरिणामात्मकं अविकृतकारणस्वरूपानुगमात् । नापि रज्जौ

चितिश्चेत्यं चितिरहं चितिः सर्वं चराचरम् ।
यतः सर्वं चितिमनु भाति सा तु स्वतन्त्रतः ॥१००॥

---

सर्प इव विवर्त्तितम् । चितिचेत्ययोर्द्वित्वग्रहात् । अतो दर्पणस्य नैर्मल्यशक्त्या अविकृते स्वास्मिन् प्रतिबिम्बावभासनवच्चितिस्वशक्त्या चेत्यावभासनम् । न च बिम्बस्य स्वसमानाकारस्य दर्पणप्रतिबिम्बेऽपेक्षणादत्रापि चितिप्रतिबिम्बदृश्यापेक्षितस्वसमानाकारबाह्यदृश्यसिद्धिरिति शङ्क्यम् । यतो दर्पणप्रतिबिम्बे बाह्यं बिम्बं नोपादानं कार्येऽननुगमात् किन्तु निमित्तम् । निमित्तञ्च घटादौ दण्डादिः । तच्च व्यभिचारितम् । करपरावर्त्तितचक्रादिना घटोत्पत्तेः । तथा च चितिदृश्यप्रतिबिम्बने मायाख्या स्वातन्त्र्यशक्तिर्निमित्तत्वेनाभ्युपगतैवेति नानुपपत्तिः । न हि प्रतिबिम्बविधां विनान्यथा दृश्यावभासनं युज्यते दृश्यस्य चिद्बाह्यत्वे प्रकाशानुपपत्तेः । सम्बन्धस्यापि दृश्यत्वेनानवस्थादिना तदसिद्धेः । चित्सम्बन्धानपेक्षणे सदा दृश्यस्यावभासोऽनवभासो वा स्यात् । इत्थमेव प्रकटिताद्यखिलपक्षप्रतिक्षेपः । एतद्विस्तारः प्रत्यभिज्ञादौ द्रष्टव्यः । तस्मात् प्रतिबिम्बविधयैव दृश्यावभासनमिति ॥ ९९ ॥ बहुविधोऽपि प्रतिबिम्बो दर्पण एवेत्यत आह—चितिरिति । चेत्यं दृश्यं चराचरम् । मत्तोऽन्ये प्रमातारः । सर्वं चितिरित्यत्र हेतुः । यत इति । यथा दर्पणमनुगतं गृहीत्वैव सर्वे प्रतिबिम्बाः प्रकाशन्ते इति प्रतिबिम्बा दर्पणात्मकाः । एवं सर्वमिदं चेत्यादि चितिमनुगतां गृहीत्वैव भातीति चितिरेवेति भावः । ननु सा चितिः काममनुगतां गृहीत्वा भातीति चेत्तस्याश्चिदात्मत्वादेव नान्यानुगमापेक्षेत्याह—सा त्विति ।

अतश्चितिं जनाः सर्वे भासिनीं सर्वसंश्रयाम् ।
भजध्वं भ्रान्तिमुत्सृज्य चितिमात्रसुदृष्टयः ॥१०१॥
कदाचिदेवं कीराणां श्रुत्वा वाक्यं महोदयम् ।
ब्राह्मणा वामदेवाद्या नामाचख्युः पुरस्य तु ॥१०२॥
यतोऽत्र विद्यां तिर्यञ्चोऽप्याहुस्तस्मादिदं पुरम् ।
प्रसिद्धविद्यानगरमिति नाम्ना प्रसिध्यतु ॥१०३॥
तदद्यापि च तेनैव नाम्ना तन्नगरं स्थितम् ।
राम तस्मात्तु सत्सङ्गो मूलं सर्वशुभोदये ॥१०४॥
सङ्गेन हेमलेखायाः सर्वे विद्याविदोऽभवन् ।
तस्मात् सङ्गः परं मूलं राम जानीहि श्रेयसः ॥१०५॥
इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे हेमचूडोपाख्याने
सत्सङ्गफलं चतुर्थोऽध्यायः ॥

---

यतः स्वतन्त्रप्रकाशत्वमेव चित्त्वमिति भावः ॥ १०० ॥ यतः प्रतिबिम्बात्मजगच्चितेर्नान्यदस्ति । अतः दर्पणाच्चितेराधिक्यं सामर्थ्यमाह—सर्वभासिनीमिति । दर्पणः केवलं प्रतिबिम्बाश्रय एव न भासक इति भावः । भ्रान्तेरुत्सर्जनमप्रामाण्यग्रहः । अतएव चितिमात्रसुदृष्टय इति । सुदृष्टिः सत्यदृष्टिः । सर्वं ज्ञानं धर्मिण्यभ्रान्तमिति न्यायात् ॥ १०१ ॥ महतः मोक्षस्योदयो यस्मात् ॥ १०२ ॥ १०३ ॥ तत् तस्मान्नामकरणाद्धेतोः । ॥ १०४ ॥ उपसंहरति—तस्मादिति ॥ १०५ ॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे व्याख्यायां
तात्पर्यदीपिकायां चतुर्थोऽध्यायः ॥

# अथ पञ्चमोऽध्यायः ।

एवं सत्सङ्गमाहात्म्यं श्रुत्वात्रिसुतभाषितम् ।
प्रहृष्टमानसो भूयः प्रष्टुमेवोपचक्रमे ॥ १ ॥
सत्यं प्रोक्तमिदं नाथ भवता शुभकारणम् ।
सत्सङ्गरूपमेतच्च प्रत्यक्षेणैव भावितम् ॥ २ ॥
यो यथा सङ्गमाप्नोति फलं तस्य तथा भवेत् ।
स्त्रियोऽपि हेमलेखायाः सङ्गात् सर्वे महाफलाः ॥३॥
भूय इच्छाम्यहं श्रोतुं हेमचूडस्तया कथम् ।
बोधितस्तन्ममाचक्ष्व विस्तरेण दयानिधे ॥ ४ ॥
एवं रामेणानुयुक्तो दत्तात्रेय उवाच तम् ।
शृणु भार्गव वक्ष्यामि कथां परमपावनीम् ॥ ५ ॥
एवं तस्या वचः श्रुत्वा विषयान् विरसान् विदन् ।
तेषु सञ्जातनिर्वेदो विमना इव संबभौ ॥ ६ ॥

---

अत्र रावायपद्यैस्तु हेमलेखात्मसंस्थितम् ।
बन्धं मोक्षं चाह गूढवाक्यैः प्रियहितेप्सया ॥

रामः श्रुत्वा ॥ १ ॥ भावितमनुभूतम् । संवर्त्तसङ्गात् । सर्वे विशालनगरवासिनः ॥ २॥ ३ ॥ ४ ॥ अनुयुक्तः पृष्टः । संसृतिदोषशामकत्वात् परमपावनीम् । एवं विषयवैरस्यप्रतिपादकम् । सञ्जातः निर्वेदः विषयभोगेऽलंबुद्धिर्यस्य । एवं सन् । वि-

चिरस्थितविषयजवासनानां वशं गतः।
त्यक्तुं वा संग्रहीतुं वा नाशकत् सहसा हि सः ॥७॥
प्रियां न किञ्चित् प्रोवाच राजपुत्रोऽतिलज्जितः।
कांश्चिच्च दिवसानेवमनयच्चिन्तयाकुलः ॥ ८ ॥
विषयेषु प्रसक्तेषु स्मृत्वा तत् प्रिययोदितम्।
विगर्हन्नेव स्वात्मानं बुभुजे वासनावशः ॥ ९ ॥
वासनावेगवशतो विषयाननुगच्छति।
दृष्ट्वैव विषयान् दोषान् प्रियाप्रोक्तान् विचिन्तयन्॥१०॥
शोकसंविग्नहृदयो विषीदति मुहुर्मुहुः।
एवं तस्याभवाच्चित्तं चलद्दोलास्थितं यथा ॥ ११ ॥

---

मना इव खिन्न इव ॥ ५ ॥ ६ ॥ वैमनस्ये हेतुमा-चिरेति। विषयान् त्यक्तुं सङ्ग्रहीतुं भोक्तुं वा ॥ ७ ॥ प्रियावचनं श्रुत्वा न किञ्चित् प्रोवाच। अतिलज्जितः स्त्रिया निरुत्तरीकृतत्वात्। एवं त्यागभोगयोरसक्तः सन् ॥ ८ ॥ कथमुभयत्रासक्तिः एकतरपक्षस्यावश्यकत्वादिति चेदाह-विषयेष्विति। प्रसक्तेषु उपस्थितेषु। यत् प्रिययोक्तं वैरस्यकारणं तत् स्मृत्वा। धिङ्मामीदृशं विषयं स्वीकरोमीति स्वात्मानं विगर्हन्नेव बुभुजे। ननु कुतो न परिहरति तदाह—वासनावश इति ॥ ९ ॥ उपस्थितविषयभोगप्रकारमुक्त्वाऽनुपस्थितविषयेष्वाह-वासनेति। अनुगच्छति विषयसमीपं प्राप्नोति। प्रियाप्रोक्तान् विषयदोषान् ॥ १० ॥ शोकेन संविग्नं प्रक्षुभितं हृदयं मनो यस्य। विषीदति दुःखं प्राप्नोति। चलद्दोलास्थितं वासनया विषयेषु पतति। विषयप्राप्तौ तद्दोषस्मृ-

भोज्यं वस्त्रं भूषणं वा योषिद्वाहनमेव वा ।
मित्राणि वापि सुहृदो नैतत्तं सुखयन्ति वै ॥ १२ ॥
नष्टाखिलार्थ इव स शोचत्येव निरन्तरम् ।
वासनाविवशः सर्वं त्यक्तुं नाशकदञ्जसा ॥ १३ ॥
नोपभोक्तुं तथा शक्तो दोषदृष्टियुतस्ततः ।
एवं तं शोकवशतो विवर्णवदनेक्षणम् ॥ १४ ॥
हेमलेखा समालक्ष्य कदाचित् सङ्गता रहः ।
किं नाथ पूर्ववत्त्वं नो लक्ष्यसेऽत्यन्तहर्षितः ॥ १५ ॥
शोचन्तमिव पश्यामि कुत एवं तव स्थितिः ।
कच्चिच्छरीरमात्मा ते नामयैर्बाध्यते सदा ॥ १६ ॥
भोगेषु रोगभीतिं वै प्रवदन्ति मनीषिणः ।
त्रिदोषसम्भवे देहे दोषवैषम्यसम्भवाः ॥ १७ ॥
आमयाः प्रायशः सर्वदेहान् व्याप्यैव संस्थिताः ।

---

त्या ततः उच्चलति ॥ ११ ॥ एवं वासनादोषदृष्टिभ्यां युतं हेमचूडं भोज्यादीनि नैषदपि सुखयन्तीत्याह—भोज्यमिति॥ १२॥ ॥ १३ ॥ वासनया दोषदृष्ट्या च युक्त इति त्यक्तुं भोक्तुं वा न शक्तः परस्परप्रतिबन्धादिति भावः ॥ १४ ॥ रहः विविक्ते । तं परीक्षितुं पृच्छति—किं नाथेति ॥ १५ ॥ शरीरेति । शरीरतादात्म्यापन्न आत्मा । केवलयोः शरीरात्मनोर्दुःखाभावादिति भावः ॥ १६ ॥ मम महाराजकुमारस्य भिषक्छ्रेष्ठैः सेवितस्य कुत आमयसम्भावनेति चेदाह—भोगेष्विति । शुभभोगेष्वित्यर्थः । त्रयाणां वातपित्तकफदोषाणां सम्यग्भवः स्थितिर्यत्र ॥ १७ ॥ विषमाशनादिभिर्दोषवैषम्यस्योक्तभोगव-

सर्वथा ह्यप्रतीकार्यं वैषम्यं दोषजं ननु ॥ १८ ॥
अशनाद्वसनाद्वाचो दर्शनात् स्पर्शनादपि ।
कालाद्देशात् कर्मतश्च दोषा वैषम्यमाप्नुयुः ॥ १९ ॥
अतस्तस्योद्भवो लोके सर्वथाऽलक्ष्यतां गतः ।
इत्यतः सति वैषम्ये चिकित्सा सम्प्रकीर्त्तिता ॥२०॥
नोक्ता चिकित्सानुत्पत्तौ वैषम्ये केनचित् क्वचित् ।
तद्वद प्रिय कस्माद्धि शोकस्य तव सम्भवः ॥ २१ ॥
इति श्रुत्वा हेमलेखां प्राह राजसुतस्ततः ।
प्रिये शृणु प्रवक्ष्यामि यन्मे शोकस्य कारणम् ॥२२॥

---

तामावश्यकत्वेन तद्देहेष्ववश्यं रोगप्राप्तिरिति भावः । ननु मादृशां कथं दोषवैषम्यं तत्प्रतीकारपराणामिति चेदाह–सर्वथेति । दोषवैषम्यजनितो रोगः प्रतीकार्यः । न तु केवलं दोषवैषम्यम् । रोगप्रागवस्थास्थकेवलदोषवैषम्यस्य प्रायो दुर्लक्ष्यत्वादिति भावः ॥ १८ ॥ दोषेषु जायमानवैषम्यनिमित्तान्याह अशनादित्यादि । अशनस्य शीतोष्णादिगुणः प्रसिद्धः । एवं पट्टोर्णादिवसनस्य। वाचो बहुलस्य प्रयुक्तस्य यो गुणः । वह्निजलादिदर्शनस्पर्शनयोः ग्रीष्महेमन्तादिकालस्य जाङ्गलानूपादिदेशस्य च शीतोष्णादि प्रसिद्धम् । कर्मतोऽपि खननादितश्च यद्वा पापकर्मतो दोषवैषम्यम् ॥ १९ ॥ अतो दोषवैषम्यहेतोरनेकत्वात् । तस्य वैषम्यस्य । ननु सूक्ष्मदृग्भिर्वैषम्योद्भवो ज्ञातुं शक्य इति चेन्नेत्याह–इत्यत इति । यतो वैषम्योद्भव आदावलक्ष्यः अतो हेतोः चिकित्सा शास्त्रे संप्रकीर्त्तिता ॥२०॥ वैषम्यविषयानुत्पत्तौ चिकित्सा नोक्ता ॥२१॥

त्वदुक्त्या यत् पुरा मेऽभूत् सुखदन्तद्धतं ननु ।
न पश्याम्यधुना किञ्चिदपि मे सुखवर्द्धनम् ॥ २३ ॥
राज्ञा वितीर्णो विषयः सुखदोऽपि समन्ततः ।
बध्यं न सुखयेद्यद्वत्तथा तस्मान्न मे सुखम् ॥ २४ ॥
विषयान् सेवमानोऽहं सदा विष्टिगृहीतवत् ।
तत् पृच्छामि प्रिये ब्रूहि किं कृत्वा सुखमेम्यहम् ॥२५॥
एवं तेन समापृष्टा हेमलेखा तदाब्रवीत् ।
नूनमेष सुनिर्वेदमागतो मद्वचःश्रुतेः ॥ २६ ॥
अस्ति बीजं श्रेयसोऽस्मिन् यत एवंविधो भवान् ।
येषु श्रेयो ह्यसम्भाव्यं त एवं वाक्यगुम्फनैः ॥ २७ ॥
न ह्यणवपि विशेषेण विशिष्यन्ते कदाचन ।

---

ततः प्रश्नानन्तरम् ॥ २२ ॥ तत् संप्रति त्वदुक्त्या हतं कुत इति चेदाह—नेति ॥ २३ ॥ नष्टं चेदन्यत् सुखसाधनं सम्पादये-ति चेदाह—राज्ञेति । न तत् स्वरूपतो नष्टम् । अपि तु बध्या-य राज्ञा दत्तविषयाद्यथा तस्य सुखं न एवं साधनं सद-पि न तस्मान्मे सुखम् ॥२४॥ ननु विषयैर्न ते सुखं चेत्तान् परि-त्यजेति चेन्मया न परित्यक्तुं शक्यत इत्याह—विषयानिति । वि-ष्टिगृहीतवत् । राजकार्यार्थं राजभटैर्गृहीता जनाः तत्कार्यं त्यक्तु-मसमर्थाः कुर्वन्ति यथा एवं वासनाभिर्गृहीतोऽहं सदा विषयान् सेवमानो दुःखं प्राप्त इति शेषः ॥ २५ ॥ स्वमनस्यब्रवीत् । श्रुतेः श्रवणात् ॥ २६ ॥ एवंविधः प्राप्तविषयवैरस्यः । एवं मदुक्तसदृशैर्वाचां गुम्फनैर्निबिडसमुदायैः ॥ २७ ॥ अणव-पि स्वल्पमपि पूर्वस्थितिं लेशतोऽपि न परित्यजन्तीति भावः ।

चिरं संराधिता हृत्स्था प्रसन्ना स्वात्मदेवता ॥ २८ ॥
त्रिपुरा येन तेष्वेव भवेदेवंविधा स्थितिः ।
इत्यालोच्यातिविदुषी बुबोधयिषती प्रियम् ॥ २९ ॥
गोपयन्ती स्ववैदुष्यं प्राहान्यव्यपदेशतः ।
शृणु राजकुमारेदं यन्मे वृत्तं पुरातनम् ॥ ३० ॥
पुरा मे जननी काञ्चित् क्रीडनाय सखीं ददौ ।

---

एवं वचःश्रुतिरेव वैरस्यकारणं चेत् कुतो न सर्वेषां वैरस्योत्पत्तिरिति चेन्मूलकारणाभावादित्याह—चिरमिति॥२८॥ एवंविधा विषयवैरस्यवती । देवताराधनरूपमूलकारणाभावान्न सर्वेषामियं स्थितिरिति भावः ॥ २९ ॥ गोपयन्तीति । स्ववैदुष्यप्रकटने विद्वत्ताभिमानशङ्काप्यस्य भवेत्ततो मद्वाक्ये नाश्वासो भवेदिति। अतः स्ववैदुष्यगोपनमिति भावः । अत्रान्यव्यपदेशेन स्वस्याः संसारबन्धनान्मुक्तिप्रकारमाह—शृण्विति । पुरातनं बन्धस्यानादिकालत्वात् ॥ ३० ॥ पुरेति । कस्याश्चित् सृष्टेरादिकाले बन्धस्यानादित्वेन सर्वादिकालासम्भवात् । जननी स्वप्रकाशशुद्धाचितिः । सखीं बुद्धिम् । काञ्चिदिति । अज्ञातकुलगोत्रेव निरूपणाल्लिङ्गदेहावयवत्वेनानादित्वं बुद्धेर्द्योतितम् । शुद्धचितेर्जननीत्वं स्वस्या जीवचितेस्तदंशभूतत्वात् । सुखदुःखाद्यनुभवक्रीडाया बुद्ध्यधीनत्वात् क्रीडनाय सखीं ददावित्युक्तम् । प्रलये बुद्धेर्लीनत्वात् सृष्ट्यादौ कर्मपरिपाकनिमित्तकबुद्ध्याविर्भावादपूर्ववत् प्राप्तत्वादुक्तं ददाविति । सा बुद्धिः । सत्त्वगुणप्रधानत्वात् प्रकाशरूपत्वात् स्वभावेन सती। स्वसत्तायां वृत्त्यन्तरानपेक्षणात् स्वतः सती । बाह्यपक्षे स्वभा-

सा स्वभावसती काश्चिदसतीमनुसङ्गता ॥ ३१ ॥
सा विचित्रविधाश्चर्यसृष्टिसामर्थ्यसंयुता ।
अलक्षिता मे जनन्या सख्या मे सङ्गताभवत् ॥३२॥
असच्चारित्रयात्यन्तं सङ्गता मम सा सखी ।
प्राणेभ्योऽपि प्रियतमा सदा तद्वशगा ह्यहम् ॥३३॥

---

वतः सती साध्वीत्यर्थः । असतीमविद्याम् । अनुसङ्गता आत्माकारतां केवलां परित्यज्याविद्याकार्यदृश्यात्मतां प्राप्तेत्यर्थः । काश्चिदिति तस्या अनिर्वचनीयताद्योतकं विशेषणम् । आगमपक्षे तु चितेः परिच्छिन्नत्वज्ञानमेवाज्ञानम् । एतच्चाज्ञानं बन्ध इति शिवसूत्रे वृत्तिकृता स्पष्टं निरूपितम् । एतत्पक्षे अनिर्वचनीयत्वाभावेन काश्चिदिति अज्ञानस्यापरिच्छेद्यशक्तित्वं ज्ञेयम् । तदुक्तम्—भ्रान्तेर्महती शक्तिर्न विवेक्तुं शक्यते नामेति । पक्षद्वयेऽप्यसतत्यिसत्यात्मकत्वाज्ज्ञेयम् ॥ ३१ ॥ सा अविद्या । मे जनन्या शुद्धचिता अलक्षिता सती मे सख्या बुद्ध्या । मन्मातुः परोक्ष एव सा असती मत्सख्या सङ्गताभवदित्यर्थः । विद्याविद्ययोर्विरोधादविद्या कार्यविषया बुद्धिः केवलशुद्धचिद्विषयिणीति तात्पर्यम् । आगमपक्षे तु शुद्धचिन्मात्रस्फूर्त्तिदशा शक्तितत्त्वम् । चिदचिदोरिदं सर्वमहमिति सामानाधिकरण्यस्फूर्तिदशा शुद्धविद्यातत्त्वम् । परिच्छिन्नचिन्मात्रस्फूर्त्तिदशा अविद्यातत्त्वम् । परिच्छिन्नचितः चेत्यस्य च स्फूर्त्तिदशा बुद्धितत्त्वमिति प्रक्रिया । तथा च बुद्धेः शुद्धचिदविषयकत्वादलक्षितेति ज्ञेयम् ॥ ३२ ॥ बुद्धिर्दृश्यपरा सदाभवदित्याह—असदिति । असत् मिथ्यारूपं चरित्रं यस्याः सा अविद्या । मम प्राणेभ्यो-

न तां विहाय मे संस्था क्षणार्द्धं वा क्वचिद्भवेत् ।
सा निर्मलस्वभावेन मां वशीकृत्य संस्थिता ॥ ३४ ॥
निरन्तरं तद्गतात्मस्वभावाभवमञ्जसा ।
सा तया दुष्टया युक्ता नव्या चित्रस्वभावया ॥३५॥
परोक्षवृत्तिमानीता स्वपुत्रेणाभियोजिता ।

---

ऽपि प्रियतमा । अतस्तद्वशगाहमभवम् । परस्परतादात्म्याध्या- सात् ॥ ३३ ॥ न तामिति । तां बुद्धिम् । संस्था स्थितिः । बुद्ध्यसत्त्वे बुद्ध्यवच्छिन्नो जीवो बुद्धिप्रतिबिम्बो जीव इत्युभयप- क्षेऽपि जीवस्य स्थितिर्न भवेदिति स्पष्टमेव । आगमपक्षे तु व्या- धकुलसंवर्द्धितराजकुमारवत् स्वस्वातन्त्र्यसमाच्छादितमाहैश्व- र्यो महेश्वर एव जीवः । तस्य बुद्धिं विना संस्था सम्यक् स्थि- तिः भेदव्यवहारो न भवेदिति तात्पर्यम् । सा बुद्धिः । निर्म- लस्वभावेन सत्त्वप्रधानरूपेण युता । मां जीवाख्यां परिच्छि- न्नां प्रतिबिम्बभूतां वा तादात्म्यापन्नां वा । बाह्यपक्षे तु मां शु- द्धकुलप्रसूतिं सा निर्मलस्वभावेन तुल्यशीलत्वाद्वशीकृत्य सं- स्थितेति युक्तमेवेति भावः ॥ ३४ ॥ तद्गतात्मस्वभावा बुद्धि- सम्मिलितस्वरूपा । बाह्यपक्षे तु तद्गतचित्तेत्यर्थः । सा मत्स- खी बुद्धिः । तया अविद्यया । दुष्टयेति । स्वनाशहेतुत्वात् । चित्रम् आश्चर्यमयमघटितज्ञानं स्वभाव स्वरूपं यस्याः । स्वली- लाप्रदर्शनेनार्थहरत्वान्नव्येति ॥ ३५ ॥ परोक्षवृत्तिं स्वर्गादिपरो- क्षकाम्यैकरूपताम् । आनीता प्रापिता । तया असत्या । मत्स- खी बुद्धिः । अविद्यया स्वर्गादिकाम्यतत्परा बुद्धिरासीदिति भा- वः । बाह्यपक्षे असत्या परोक्षवृत्तिं रहसि स्थितिम् आनीता स्व-

तस्याः पुत्रोऽतिमूढात्मा मदिराघूर्णितेक्षणः ॥ ३६ ॥
बुभुजे तां समाक्रम्य सर्वदा मत्समक्षतः ।
सा तेनाक्रान्तसर्वाङ्गी भुज्यमानानुवासरम् ॥ ३७ ॥
न मां जहौ कदाचिच्च तत्स्पृष्टा तेन चाप्यहम् ।
ततः पुत्रः समुत्पन्नो मूढस्य सदृशाकृतिः ॥ ३८ ॥

---

पुत्रेणाभियोजिता मत्सखी जातेति । तस्या अविद्यायाः पुत्रो मोहः तेनाभियोजिता । अविद्यया काम्यतत्परतायां सद्विचारप्रतिबन्धकमोहात्मकवृत्तिविशेषं प्राप्ता बुद्धिरिति भावः । तस्या अविद्यायाः मौढ्ये हेतुः मदिरेत्यादि । एतद्विशेषणम् । मोहिता मे बुद्धिः पापाचाराभवदिति द्योतनाय ॥ ३६ ॥ तां मत्सखीं बुद्धिं पापाचरणेन मोहप्रचुरा बुद्धिर्जातेत्याह-समाक्रम्येति । मत्समक्षत इति । बुद्धेश्चित्प्रकाशाधीनप्रकाशत्वादिति तात्पर्यम् । सा बुद्धिः । तेन मोहेन ॥ ३७ ॥ सा सखी मां कदाचिदपि प्रियसङ्गमकालेऽपि न जहौ । चित्प्रकाशाश्रयेणैव बुद्धिवृत्तीनामवभासनादिति तात्पर्यम् । यस्मान्मां न जहौ तत् तस्माद्धेतोः । तेन सखीप्रियेण मूढात्मना । स्पृष्टा जाता । घटावच्छिन्नाकाशस्यायःपिण्डतादात्म्यापन्नवह्नेर्वा वर्तुलाद्याकार इव बुद्ध्या परिच्छिन्नायाः वा तादात्म्यापन्नाया वा चितेर्मोहादिरूपतेति भावः । ततः चिरसङ्गानन्तरम् । मूढस्य मोहस्य स्वसदृशाकारः मनोरूपः पुत्रो जातः । यद्यपि मनः पूर्वमेवास्ति । तथापि वीर्यात्मना पितृदेहे स्थितपुत्र इव प्राक् सूक्ष्मरूपं मनः । बुद्धौ मोहसम्बन्धानन्तरमेव विकल्पाद्याधिक्यात् पितुः प्रसूतः पुत्र इव मनः पुष्टमासीदिति तात्पर्यम् ।

तरुणः सोऽभवत्तूर्णमतिचञ्चलसंस्थितिः ।
पितुर्मौढ्येन संयुक्तः पितामह्या गुणेन च ॥ ३९ ॥
अनेकचित्रनिर्माणसामर्थ्येन समावृतः ।
पितामह्या शून्यनाम्न्या पित्रा मूढाभिधेन च ॥४०॥
अस्थिराह्वः शिक्षितोऽभूत् स्वयं चातिविशारदः ।
गतिमप्रतिबद्धां वै शीघ्राच्छीघ्रां समासदत् ॥ ४१ ॥
एवं मम सखी स्वच्छस्वभावा जन्मतः सती ।
असतीसङ्गतोऽत्यन्तं मालिन्यं समुपागता ॥ ४२ ॥
सख्या प्रियेण पुत्रेणासत्स्वभावयुतेन सा ।

---

असत्स्वरूपत्वेन सदृशाकृतिर्ज्ञेया ॥ ३८ ॥ तरुणो व्यवहारक्षमः । पितुर्मोहस्य मौढ्येन जडत्वगुणेन । पितामह्या अविद्याया अनेकनिर्माणे उपादानं स्वातिरिक्तमनपेक्ष्य यत् सामर्थ्यं तेन गुणेन च समावृतः ॥ ३९ ॥ एतेषां नामकथनपूर्वकं मनसो गुणानाह—पितामह्या इति । मनसः पितामही अविद्या । विचारे कृते तत्स्वरूपविलयाच्छून्यनाम्नी सा । पिता मोहः । मूढताप्रयोजक इति मूढाभिधः सः । आभ्यामस्थिराह्वः शिक्षितोऽभूदिति सम्बन्धः ॥ ४० ॥ पितृशिक्षया मूढतां प्राप्तः पितामहीशिक्षया विचित्रनिर्माणसामर्थ्यं प्राप्तः । स्वयमतिचतुरोऽप्रतिबद्धां गतिं प्राप्तवान् । शीघ्राच्छीघ्राम् अतिशीघ्रामित्यर्थः । एवं बुद्धेर्मोहवशान्मनः प्ररूढं सदतिचञ्चलत्वात् क्वचिदस्थिरं अनन्तविचित्रकल्पनापरं मूढत्वाद्विचारविमुखश्चासीदिति श्लिष्टग्रन्थतात्पर्यम् ॥ ४१ ॥ एवमुक्तप्रकारेण । मम सखी बुद्धिः । असतीसङ्गतः अविद्यासङ्गेन । अत्यन्तमालिन्यं सत्त्व-

चिरसङ्गात्तेषु दृढानुरागेण समायुता ॥ ४३ ॥
जहौ मय्यनुरागन्तु सर्वथा क्रमतः सखि ।
अहं स्वभावसरला हातुं तत्सङ्गमक्षमा ॥ ४४ ॥
अनीशा तत्परैवासं सर्वथा तामनुव्रता ।
अथ तस्याः प्रियो मूढो भुञ्जानस्तां तु सर्वदा ॥४५॥
प्रसह्य मां समाक्रान्तुमुद्युक्तः सर्वथाभवत् ।

---

स्वभावावरकं तामसं मोहं समुपागता । सख्या अविद्यया । असत्स्वभावेन प्रियेण मोहेन पुत्रेण मनसा च । दृढसङ्गात् सदा तद्रूपेण परिणतत्वात् । बुद्धिः स्वीयं सत्त्वरूपं परित्यज्य मोहात्मना मनःकल्पितवस्तुसौन्दर्यादिव्यवसायात्मना च सदा स्थितेति भावः ॥ ४३ ॥ जहाविति । कालक्रमतः मूढादिषु दृढानुरागान्मय्यनुरागं प्रीतिं जहौ । परिच्छिन्नाचितिरूपकर्तृ-भोक्त्रात्मकजीवस्वरूपविचारोऽपि बुद्धेर्नासीदिति तात्-पर्यम् । नन्वेवं सति त्वयापि तदानुरागस्त्यक्तः स्यादिति चेन्नेत्याह—अहमिति । स्वभावतः सरला । निसर्गऋजु-चित्तेत्यर्थः । कुटिलानां हि सनिमित्ता प्रीतिः । सरलाना-मन्यप्रीत्याद्यनिमित्तैव प्रीतिरिति तात्पर्यम् ॥४४॥ मत्प्रीतेरनि-मित्तत्वात् प्रीतिं त्युक्तमनीशा अतएव तत्परा सती सर्वथा ता-मनुव्रता । तत्समानशीलाऽभवमित्यर्थः । मम चिन्मात्ररूपत्वात् प्रतिबिम्बभूतैर्बुद्धिधर्मैर्योगाद बुद्ध्यनुकृतिं प्राप्तेति भावः । अथ एवं बुद्ध्यनुकारप्राप्त्यनन्तरम् ॥ ४५ ॥ मत्प्रियामनुगतेयमिति मत्वा मामपि हठेन भोगायाक्रान्तुं स मूढ उद्युक्तोऽभवत् । एवं जातेऽपि स्वभावशुद्धा अहं न तद्वशं गता । बुद्धेर्विषयवासना-

नाहं स्वभावसंशुद्धा वस्तुतस्तद्वशं गता ॥ ४६ ॥
तथापि लोके मेऽत्यन्तं परीवादो महानभूत् ।
मूढेन सर्वथेयं च भुज्यते इति सर्वतः ॥ ४७ ॥
अस्थिराख्यं स्वपुत्रं सा मयि न्यस्य सखी मम ।
प्रियेण संपरिष्वक्ता सर्वथा तत्पराभवत् ॥ ४८ ॥
अथास्थिरो मया सम्यग् लालितः पोषितस्ततः ।
प्रौढस्त्रियं पितामह्या अनुमत्योपसङ्गतः ॥ ४९ ॥
सा प्रिया तस्य चपलाभिधाना हि प्रतिक्षणम् ।
प्रियस्य सम्मतं रूपं भिन्नं भिन्नं मनोहरम् ॥ ५० ॥
गृहीत्वाश्चर्यजननं प्रियमेवं स्वके वशे ।
चक्रे सात्यन्तनिपुणा स्वनैपुण्यवशात् खलु ॥ ५१ ॥

---

निविडत्वेऽपि न जीवतादात्म्यमपगच्छति । एवं बुद्धितादात्म्यापन्नचितेर्बुद्धिवृत्तिरूपमोहसम्पर्काभासेऽपि दर्पणस्य दर्पणप्रतिबिम्बन्यायेन न वस्तुतो मोहसम्पर्क इति भावः ॥ ४६ ॥ परीवादोऽपवादः । परीवादस्वरूपमेवाह—मूढेनेति । सर्वतः सर्वत्र । अविवेकिनो बुद्धिधर्मानात्मन्यारोपयन्तीति तात्पर्यम् ॥ ४७ ॥ सा बुद्धिः सखी । तत्परा मूढपरा । मनःकल्पितमपि निश्चेष्टुमसमर्था बुद्धिर्मोहैकरूपाऽभवदिति भावः ॥ ४८ ॥ अथ मयि पुत्रन्यासानन्तरम् । पितामह्याः मूढमातुः अविद्याया इति यावत् । स्त्रियम् कल्पनाम् । बुद्धेरतिमोहात्मतामाप्त्यनन्तरं चित्तादात्म्यापन्नं मनः कल्पनायां समर्थं सत् कल्पनैकपरमभवदित्याशयः । कल्पनेऽविद्यानुकूलेति तदनुमतिर्ज्ञेया ॥ ४९ ॥ कल्पनायाश्चपलेति नाम । प्रियस्य मनसः ॥ ५० ॥ स्वनै-

अस्थिरोऽपि क्षणेनैव त्वसंख्यशतयोजनम् ।
प्रयात्यायाति च सदा न श्रान्तिमुपगच्छति ॥ ५२ ॥
समीहते यत्र गन्तुमस्थिरश्च यदा यदा ।
तस्येष्टं स्वस्वरूपन्तु कृत्वा सा चपलापि हि ॥ ५३ ॥
तत्र तत्र स्थिता भूत्वा रमयत्येव स्वं प्रियम् ।
एवं सा चपला सम्यगस्थिरेण युता सती ॥ ५४ ॥
सुषुवे पञ्चतनयान् मातापितृपरायणान् ।
ते समर्थाः पञ्चविधा मयि सख्या निवेशिताः॥ ५५ ॥
अहं सख्यनुरक्ता तानकुर्वं बलवत्तरान् ।
अथ ते पञ्चतनयाश्चपलायाः पृथक् पृथक् ॥५६॥
चक्रुरायतनं श्रेष्ठं विचित्रमतिविस्तृतम् ।

---

पुण्यवशाद्दशे चक्रे । मनो विचित्रकल्पनापरं प्रतिक्षणमभवदित्याशयः ॥ ५१ ॥ अस्थिरो मनः ॥ ५२ ॥ समीहत इति । यत्र यत्र मनो गच्छति तत्र तत्र विचित्रानेकल्पनां करोत्येवेति भावः ॥ ५३ ॥ रमयत्येवेति । स्वयमेव मनोराज्यादिकमन्तःसङ्कल्प्य तत्प्रयुक्तसुखाभासं प्राप्नोतीति भावः । युता सती तनयान् सुषुवे इति योजना ॥ ५४ ॥ सुषुव इति । तनयान् ज्ञानेन्द्रियाणि । मनसो निर्विकल्पत्वे इन्द्रियवृत्त्यनुदयात् मनसा विकल्पनायां इन्द्रियप्रसूतिः इन्द्रियप्रसरस्य मनःकल्पनोपयुक्तत्वान्मातापितृपरायणानिति ज्ञेयम् । सख्या मयि निवेशिता इति चित्तादात्म्यापत्तिरुक्ता ॥ ५५ ॥ तान् पुत्रान् । बलवत्तरान् । चित्तादात्म्यप्रकर्षेण स्वतन्त्रप्रकाशतुल्यानिति भावः ॥ ५६ ॥ विचित्रं विविधं गन्धाद्यु-

पितरं स्ववशे चक्रुर्मात्रा सम्यग् विभाविताः ॥ ५७ ॥
आनयन्ति स्वायतनं पितरं तं क्षणे क्षणे ।
तत्रास्थिरो ज्येष्ठसुतायतनं विनिविश्य तु ॥ ५८ ॥
अशृणोद्विविधान् शब्दान् सुस्वरानितरानपि ।
क्वचिन्मधुरसङ्गीतं क्वचिद्वाद्यं सुमङ्गलम् ॥ ५९ ॥
ऋचो यजूंषि सामानि मन्त्रानाथर्वणानपि ।
शास्त्रागमेतिहासांश्च भूषणानाञ्च सिञ्जितम् ॥६०॥
भृङ्गसंघस्य गीतञ्च पिकपञ्चमसुस्वरम् ।
एवं मनोहरान् शब्दान् शृण्वन् पुत्रनिदेशतः ॥ ६१ ॥
प्रीतः पुत्रवशं प्रागादथ पुत्रोऽन्यथादिशत् ।
विरुद्धान् कर्णकटुकानशृणोद्भैरवान् रवान् ॥ ६२ ॥
सिंहादिगर्जितं मेघनिर्घोषमशनेस्तथा ।

---

चक्षुर्विधस्थानम् । अतिविस्तृतम् असंख्यविषयग्रहणेऽपि तदुदरापूर्त्तेः । सर्वव्यवहारस्य तदधीनत्वात् श्रेष्ठम् आयतनं चक्षुरिति । तत्तद्गोलकाधिष्ठिता बभूवुरित्याशयः । मात्रा कल्पनया पोषिताः विभाविताः विकल्पपरं मनः सदेन्द्रियद्वारेण बहिर्मुखमभवदिति तात्पर्यम् ॥५७॥ पितुर्वशीकरणमेव विविच्य दर्शयति—आनयन्तीति । ज्येष्ठसुतः श्रोत्रेन्द्रियम् ॥ ५८ ॥ इतरान् विस्वरान् । एतदेवाह—क्वचिदिति ॥ ५९ ॥ ६० ॥ मनः श्रोत्रेन्द्रियमाविश्य श्रोत्रद्वारा तत्तच्छब्दाकारेण परिणतमिति भावः ॥ ६१ ॥ पुत्रवशं श्रोत्र दृढनिवेशम् । अन्यथादिशादिति । मनसो बाह्यविषयग्रहणस्येन्द्रियाधीनत्वादिन्द्रियादेशेनाशृणोदिति ॥ ६२ ॥ अशनिनिर्घोषविशेषणं ब्र-

ब्रह्माण्डभेदनं गर्भस्रावणं सुभयङ्करम् ॥ ६३ ॥
रुदितं विप्रलपितं शोचितादिविचित्रितम् ।
एवं श्रुत्वा सुचकितश्चान्यत्राप्यशृणोत्तथा ॥ ६४ ॥
द्वितीयसुतनीतोऽथास्थिरस्तद्भवनं ययौ ।
तत्रापश्यन् मृदुस्पर्शान्यासनानि शुभानि च ॥ ६५ ॥
शयनानि च वासांसि कठिनस्पर्शकान्यपि ।
शीतस्पर्शानि वस्तूनि तथोष्णस्पर्शकानि च ॥६६॥
अनुष्णाशीतस्पर्शानि विचित्राण्यभिवीक्ष्य तु ।
हितान् दृष्ट्वा प्रमुदितो विषण्णस्त्वहितानपि ॥ ६७ ॥
अथ तृतीयतनयभवनं प्राप्य सोऽस्थिरः ।
अपश्यद्बहुचिराकारान् भावान् विविधवर्णकान् ॥६८॥
रक्तान् श्वेतान् पीतनीलान् हरितान्पाटलानपि ।
धूम्रान् कडारान् कपिशान्मेचकान् कर्बुरांस्तथा ॥६९॥
स्थूलान् कृशानणून्दीर्घानायतान् वर्त्तुलांस्तथा ।
अर्द्धवृत्तान् दीर्घवृत्तान् सुन्दरांश्च विभीषणान् ॥७०॥
बीभत्सान् भास्वरान् रौद्राननालोकांश्च दृङ्मुषः ।
क्वचिद्भितं ततोऽन्यश्च पश्यन्तं पितरं पुनः ॥ ७१ ॥
अनयत्तुर्यतनयो भवनं स्वं विचित्रितम् ।
तत्राससाद पुष्पाणि फलान्यन्यानि च क्रमात् ॥७२॥

---

ह्माण्डेत्यादि ॥ ६३ ॥ ६४ ॥ द्वितीयसुतस्त्वगिन्द्रियम् ॥६५॥
॥ ६६ ॥ ६७ ॥ तृतीयश्चक्षुः ॥ ६८ ॥ ६९ ॥ नेत्रस्य रू-
पान्यपरिमाणादिविषयत्वादाह—स्थूलानित्यादि ॥ ७० ॥
अनालोकानन्धकारान् कीदृशान् । दृङ्मुषः ॥ ७१ ॥ तुर्यो

पेयानि लेह्यचोष्याणि भक्ष्याणि रसवन्ति वै ।
सुधास्वादूनि मधुराण्यन्यान्यम्लरसानि च ॥ ७३ ॥
कटुकानि च तिक्तानि कषायाण्यपि कानिचित् ।
क्षाराणि मधुराम्लानि कट्वम्ललवणानि च ॥७४॥
कटुतिक्तानि चित्रात्मरसानि विविधान्यपि ।
आस्वादयन्नात्मजेन समेतोऽथान्तिमः सुतः ॥ ७५ ॥
निनाय पितरं स्थाने स्वीयेऽत्यन्तविचित्रिते ।
तत्रोपालभतानेकपुष्पाणि च फलानि च ॥ ७६ ॥
तृणान्यन्यान्योषधीश्च भावानन्यांश्च सर्वतः ।
सुगन्धान् पूतिगन्धांश्च मृदुगन्धोग्रगन्धकान् ॥ ७७ ॥
मोहगन्धान् ज्ञानगन्धान् मूर्छागन्धान् विचित्रितान् ।
पुत्राणां भवने चैवं प्रविशन् निविशन्नपि ॥ ७८ ॥
हितेषु रमते क्वापि विषीदत्यहिते क्वचित् ।
सदा गमागमपरः पुत्राणां भवने बभौ ॥ ७९ ॥
ते पुत्राः पितृवात्सल्यात् पितृहीना न च क्वचित् ।
स्पृशन्ति विषयांश्चित्रान् स्वल्पं वापि कदाचन ॥८०॥
अस्थिरस्तु पुत्रगृहे भुक्त्वा तान् विषयान् बहून् ।

---

रासनं रसानुमितं पुष्पादि ज्ञेयम् ॥ ७२ ॥ ७३ ॥ मधुराम्ला-नीत्यादि मिश्ररसः ॥ ७४ ॥ अन्तिमः घ्राणम् ॥ ७५ ॥ ७६ ॥ भावान् अर्थान् तानेवाह—सुगन्धानित्यादि ॥ ७७ ॥ मोहजनको मोहगन्धः । एवमग्रेऽपि ॥ ७८ ॥ ७९ ॥ ते पुत्रा इति । मनो विहाय स्वातन्त्र्येणेन्द्रियाणां विषयग्रहणा-सामर्थ्यमिति भावः ॥ ८० ॥ मन इन्द्रियाभिनिविष्टं बाह्यवि-

मुषित्वान्यांश्च विषयान् गुप्त्या नयति स्वं पदम्॥८१॥
पत्न्या चपलया साकं रहः पुत्रैर्विना स्वयम्।
भुनक्त्यतितरां नित्यमथान्या चपला स्वसा ॥८२॥
महाशना पतिं वव्रे मनःक्रान्तं तमस्थिरम्।
तस्यामतितरां सक्तो यदाभूदस्थिरोऽपि वै ॥८३॥
तदा तस्याः प्रीतये स भोगाहरणतत्परः।
तेनानीतं बह्वपि च भक्षित्वा क्षणमात्रतः ॥८४॥
पुनर्बुभुक्षयाक्रान्ता भोगाहरणहेतवे।
सदा प्रियं सन्दिशति सोऽप्याहर्तुं सदेक्षते ॥८५॥
पुत्रैः पञ्चभिरानीतं प्रियेणापि सुसंभृतम्।
भुक्त्वा क्षणेन भूयोऽपि सा बुभुक्षाप्रपीडिता ॥८६॥
भोगाहृतौ सन्दिशति प्रियं पुत्रांश्च सर्वदा।
ततः सा स्वल्पकालेन सुषुवे पुत्रयोर्युगम् ॥८७॥

---

षयमासाद्य तत्कृतसुखादिकं तत्काल एवानुभवति। कांश्चिच्च विषयान् संस्कारद्वारेणान्तर्गुप्त्याऽप्रकटरूपेण गृहीत्वा स्वपदे हृदि स्थित्वा तं विषयं स्मृत्यादिना विकल्प्य तत्सुखमनुभवतीत्याह—अस्थिर इति ॥ ८१ ॥ रहः स्वभार्दौ। अन्या आशा ॥ ८२ ॥ तम् अस्थिरम्। नित्यविषयभोगेनाशाप्रवृद्धेति भावः ॥ ८३ ॥ तस्यां महाशनायामत्यन्तासक्तिहेतुना तस्याः प्रीतये सदा भोगाहरणतत्परोऽभवत् ॥ ८४ ॥ दुष्पूराशाविष्टं मनः सर्वदा विषयसाधनपरमभवदिति तात्पर्यम् ॥ ८५ ॥ सपत्न्याः पुत्रैरिन्द्रियैः ॥ ८६ ॥ भोगानाम्

ज्वालामुखस्तयोर्ज्येष्ठो निन्द्यवृत्तस्तथापरः ।
सदा मातुः प्रियतमौ तौ पुत्रौ संबभुवतुः ॥ ८८ ॥
महाशनायामासक्तः संश्लिष्यति यदास्थिरः ।
तदा ज्वालामुखज्वालालीढसर्वकलेवरः ॥ ८९ ॥
अस्थिरः पीडितोऽत्यन्तं गाढमूर्छामुपैति हि ।
कदाचिन्निन्द्यवृत्तेन सङ्गतः प्रियसूनुना ॥ ९० ॥
सर्वैर्विनिन्द्यतामेति मृततुल्यो हि जायते ।
एवं यदास्थिरो जातो दुःखभोगैकतत्परः ॥ ९१ ॥
तदा सखी मे स्वभावसती पुत्रेऽस्थिराह्वये ।
अतिवात्सल्यतस्तेन सङ्गता तस्य दुःखतः ॥ ९२ ॥
दुःखभारसमाक्रान्ता निन्द्यवृत्तेन सङ्गता ।
ज्वालामुखेन च तथा पौत्रेणाश्लेषिता सती ॥ ९३ ॥
सुदग्धा निन्दिता लोकैर्मृतप्राया बभूव ह ।
तां सदानुगता चाहं लुप्तप्रायाभवं प्रिय ॥ ९४ ॥

---

आहृतौ आहरणविषये ॥ ८७ ॥ तयोः पुत्रयोर्मध्ये ज्येष्ठो ज्वालामुखः क्रोधः । परः निन्द्यवृत्तो लोभः । मातुराशायाः । आशाधिक्यात् क्रोधलोभयोः प्राबल्यमभवदित्याशयः ॥ ८८ ॥ यदा यदा आशापरवशस्तदा तदा क्रोधलोभकृतं महादुःखं प्राप्नोतीति तात्पर्यम् ॥ ८९ ॥ ९० ॥ लोभेन निन्द्यता ततो मृततुल्यता च स्पष्टा ॥ ९१ ॥ एवं मनसोऽतिदुःखप्राप्तौ मनोबुद्ध्योरेकात्म्याद् बुद्धेरपि दुःखप्राप्तिरित्याह—तदेति । सखी बुद्धिः । पुत्रे मनसि ॥ ९२ ॥ ९३ ॥ तां सखीम् । स्वोपाधेर्बुद्धेः रजस्तमोव्याप्तत्वेन स्वरूपस्यानवभासाल्लुप्तप्रायत्वं ज्ञेयम् ।

एवं बहूनि वर्षाणि सख्या दुःखेन दुःखिता ।
अस्थिरोऽभूदस्वतन्त्रो महाशनापरिग्रहात् ॥ ९५ ॥
पुरं प्राप दशद्वारं केनचित् कर्मणा क्वचित् ।
तस्मिन्महाशनायुक्तो पुत्रैर्मात्रादिभिर्युतः ॥ ९६ ॥
न्यवसत् स सुखप्रेप्सुर्दुःखं भुञ्जन् दिवानिशम् ।
पुत्राभ्यां दग्धसर्वाङ्गो निन्दितश्चानुवासरम् ॥९७॥
इतस्ततः समाकृष्टः प्रियाभ्यां सर्वदा हि सः ।
पुत्राणां पञ्चभवनं प्रविशन् निविशन्नपि ॥ ९८ ॥
अत्यन्तं श्रान्तिमायाति न सुखं लभते क्वचित् ।
एवं पुत्रस्य दुःखेन सखी मेऽत्यन्तदुःखिता ॥ ९९ ॥
अभून्मूर्च्छितकल्पा सा एवं तत्पुर आवसत् ।
ज्वालामुखानिन्द्यवृत्तयुता या सा महाशना ॥१००॥
शून्याख्यया पोषिता च मूढेन श्वशुरेण च ।
तथा सपत्न्या चपलाख्ययात्यन्तं समेधिता ॥१०१॥

---

॥ ९४ ॥ दुःखिताऽभवमिति सम्बन्धः ॥ ९५ ॥ पुरं शरीरं ब्रह्मरन्ध्रेण सह दशद्वारम् । केनचित् प्रारब्धेन कर्मणा । बाह्यपक्षे तु युद्धादिकर्मणा । क्वचित् प्रलयानन्तरं सृष्टिकाले ॥ ९६ ॥ सुखप्रेप्सुरिति । सुखस्येच्छामात्रं दुःखमेव प्राप्यते इति भावः ॥ ९७ ॥ प्रियाभ्यां विकल्पाशाभ्याम् । पुत्राणाम् इन्द्रियाणाम् ॥ ९८ ॥ पुत्रस्य मनसः । सखी बुद्धिः ॥ ९९ ॥ सात्त्विकांशापगमान्मूर्च्छितकल्पा । तत्पुरे देहे । महाशना आशा ॥ १०० ॥ शून्याख्यया

अस्थिरं स्ववशे चक्रे पतिं तत्पुरसंस्थिता ।
सखीप्रीत्या तत्र चाहमवसं तत्परा सती ॥१०२॥
सखीदुःखाद्धतप्राया सर्वेषां रक्षणोद्यता ।
यद्यहं तत्र न स्यां वै क्षणमात्रमपि प्रिय ॥१०३॥
न भवेत्तत्र चैकोऽपि मया सर्वं हि रक्षितम् ।
शून्यया शून्यतां प्राप्ता मूढेन मूढतामपि ॥१०४॥
अस्थिरेणास्थिरत्वञ्च चापल्यं चपलायुता ।
ज्वालामुखाज्ज्वलत्ताञ्च नित्यवृत्तात्तदात्मताम् ॥१०५॥
सखीसंयोगतश्चैवमभवन्तत्तदाकृतिः ।
सखीं यदि विमुञ्चामि सा नश्येत् क्षणमात्रतः॥१०६॥
मां सङ्गतेन तेषां वै समाहुर्व्यभिचारिणीम् ।
जना मूढा सर्व एव कुशला निर्मलां विदुः ॥१०७॥

---

भर्तुः पितामह्या अविद्यया ॥ १०१ ॥ अविद्यामोहकल्पनाभिः प्ररूढया आशया मनः समाक्रान्तमित्येतदाह—अस्थिरामिति सखीति । बुद्धितादात्म्यापन्नायाश्रितो बुद्ध्यनुकृतिर्नियतैवेति भावः ॥ १०२ ॥ यद्यहमिति । दर्पणं विना प्रतिबिम्बवत् अधिष्ठानमन्तरा न किञ्चिदारोपितं भवेदिति भावः ॥ १०३ ॥ सर्वाधिष्ठानत्वात् स्वस्य सर्वानुकृतिमाह—शून्ययेत्यादि । शून्यया युता ॥ १०४ ॥ १०५ ॥ मम चिद्रूपाया अनेकरूपता बुद्धितादात्म्यादेवेत्याह—सखीसंयोगत इति । सखीमिति । अहं बुद्धेरप्यधिष्ठानमिति मां विना बुद्धिरपि न भवेदित्याशयः ॥ १०६ ॥ तेषां बुद्ध्यादीनां सङ्गतेन सहभावेन मां शुद्धामपि व्यभिचारिणीमाहुः सर्वे जनाः । अतएव ते

महासती मे जननी विशुद्धा निर्मलाकृतिः ।
आकाशादपि विस्तीर्णा सूक्ष्मा च परमाणुतः ॥१०८॥
सर्वज्ञानाप्यकिञ्चिज्ज्ञा सर्वकर्त्र्यपि निष्क्रिया ।
सर्वाश्रयाप्यनाधारा सर्वाधाराप्यनाश्रिता ॥१०९॥
सर्वरूपाप्यरूपा सा सर्वयुक्ताप्यसंयुता ।

---

मूढाः । शुद्धाखण्डचिद्रूपमप्यात्मानं क्षणिकदृश्याकारानुकारमात्रेण क्षणिकमाहुर्बौद्धादय इति तात्पर्यम् । कुशलाः सूक्ष्मधियस्तु स्मृत्यनुसन्धानादिमूलसर्वव्यवहारानुपपत्त्या तन्मतमुपेक्ष्य निर्मलां कालदेशादिपरिच्छेदमलनिर्गतां मां विदुः ॥ १०७ ॥ ननु कथं ते दुष्टसङ्गताया निर्मलत्वमिति चेन्मातुः सकाशात् मासमहामन्त्रमाहात्म्यादिति वक्तुमादौ मातरं स्तौति–महासतीत्यादि । बाह्यपक्षे महासती महापातिव्रता । अतएव शुद्धा । मानसदोषरहिता निर्मलाकृतिः शरीरदोषरहिता च । आकाशादपि विस्तीर्णा या सा । परमाणुतः सूक्ष्मबुद्ध्यायुपेतत्वात् सूक्ष्मा । आन्तरपक्षेऽनवच्छिन्नसत्तारूपेति महासती । विशुद्धा शुद्धाचिदेकरूपत्वादेकरसेत्यर्थः । निर्मलाकृतिः अज्ञानादिस्वरूपावरकमलानाक्रान्ता । कारणत्वेन भासकत्वेन च व्यापकत्वादाकाशादपि विस्तीर्णा । परमाणोरप्यन्तरनुस्यूतत्वाद्दुर्ज्ञेयत्वाच्च परमाणुतः सूक्ष्मा ॥ १०८ ॥ बाह्यपक्षे स्वभावतः सर्वज्ञानापि तत्प्रयुक्ताभिमानाभावादकिञ्चिज्ज्ञेव तिष्ठतीति । एवमग्रेऽपि । सर्वेषां पोषकत्वेनाश्रया । सर्वकलानामाधारापि । आन्तरपक्षे तु सर्वज्ञत्वादिकं दृश्यकृतमिति स्वतः किञ्चिज्ज्ञत्वादिकम् । सर्वत्र भासमानत्वात्-

सर्वत्र भासमानापि न ज्ञेया केनचित् क्वचित् ॥११०॥
महानन्दाप्यनानन्दा मातापितृविवर्जिता ।
माहश्यस्तनयास्तस्याः सन्ति संख्याविवर्जिताः॥१११॥
यथा तरङ्गा जलधेरसंख्यः सोदरीगणः ।
सर्वास्ता मत्समाचारा राजपुत्र भवन्ति वै ॥११२॥
महामन्त्रवर्ती चाहं सर्वैरेतैः सखीगणैः ।

---

सर्वाधारा ॥ १०९ ॥ बाह्यपक्षे सर्वरूपा । सर्वावयवसौन्दर्यवत् सर्वैर्धनधान्यादिभिर्युक्ता । सर्वत्र कारुण्यसौशील्यादिस्त्रीगुणैर्भासमाना प्रसिद्धापि क्वचित् केनाचिन्न ज्ञेया सदान्तःपुरस्थत्वात् । आन्तरपक्षे तु सर्वप्रतिबिम्बरूपस्यापि दर्पणस्य यथा प्रतिबिम्बरूपराहित्यमेवं नेयम् । सर्वत्र प्रतिबिम्बांशे भासमानोऽपि दर्पणो न केनचित् प्रतिबिम्बव्यतिरेकेण ज्ञायते, एवं भावेषु सर्वत्र भासमाना चितिर्भावव्यतिरेकेण न ज्ञायते ॥ ११० ॥ बाह्यपक्षे महानानन्दो विभवनिमित्तो यस्याः । एवंविधापि आनन्दनिमित्तहर्षानुत्सेकादन्यैरलक्ष्यमाणानन्दत्वादनानन्दा । मातापितरौ वर्जितौ यया । महासतीत्वेन पतिपरायणत्वात्त्यक्तमातापितृस्नेहेति तात्पर्यम् । आन्तरपक्षे महानन्दरूपापि स्वरूपातिरिक्तानन्दायोगादनानन्दा । नित्यत्वान्मातापितृवर्जिता । संख्याविवर्जिता असंख्याः ॥ १११ ॥ यथा तरङ्गा असंख्यास्तथा मे असंख्यः सोदरीगणः । एतद्दृष्टान्तेन वस्तुतः जनन्यव्यतिरिक्तत्वं कन्यानामुक्तं ज्ञेयम् । समाचाराः सखीकुटुम्बपरायणाः ॥ ११२ ॥ एवं दुष्टैः सङ्गता तत्पराप्यहं तेषां दो-

सङ्गता तत्परा चापि मातृतुल्या स्वरूपतः ॥११३॥
अस्मिन् पुरे सर्खीपुत्रो यदा श्रान्तो भवत्यलम् ।
तदा मातुः समुत्सङ्गेऽस्थिरः शेते सुनिर्भरम्॥११४॥
अस्थिरस्तु यदा सुप्तस्तदा तस्य सुतादयः ।
स्वापं समधिगच्छन्ति नान्यो जागर्त्ति कश्चन ॥११५॥
तदा तद्रक्षति पुरमस्थिरस्य प्रियः सखा ।
प्रचाराख्यः प्रतिचरन् पूर्वद्वारयुगे मुहुः ॥११६॥
अस्थिरस्यापि या माता सखी मे तनयेन सा ।
तस्याः सखी च या श्वश्रूरसती या स्वभावतः ॥११७॥

---

यैरस्पृष्टा । कुत एवमिति चेदेवंविधमेव मन्त्रसामर्थ्यं ममास्ती-त्याह—महामन्त्रेति । आन्तरपक्षे तु महामन्त्रो मायाशक्तिः तया-हमघटितमपि शुद्धस्वरूपे संसारावभासनं सम्पादयामीति तात्-पर्यम् ॥ ११३ ॥ एवं प्रसङ्गात् स्ववृत्तमभिधाय पुनः सखीपुत्रादिवृत्तं निरूपयति—अस्मिन्निति । महाशनानिमित्तं विषयाहरणादिना यदा श्रान्तस्तदा शेते । आन्तरपक्षे तु प-रिपक्वकर्मणां भोगेन क्षयादन्येषामपरिपाकान्मध्ये मातुर्बुद्धेरुत्सङ्गे मनः शेते लयं प्राप्नोति ॥ ११४ सुताः इन्द्रियाणि क्रोधलोभौ च । आदिपदेन पत्नी माता च । आन्तरपक्षे तु मनसि विलीने इन्द्रियादि सर्वं विलीनमिति तात्पर्यम् ॥ ११५ ॥ तदा सर्वस्वापकाले सुषुप्तौ । प्रचारः प्राणः । मनःप्राणयोः अन्यतर-रोधे द्वयोः रोधसम्भवात् प्रियत्वं सखीत्वं प्राणस्य । पूर्वद्वारयुगं नासापुटद्वयम् ॥ मे सखी अस्थिरमाता या सा तनयेन । तन-यादिना सह यदा सुप्ता तदेति शेषः । तस्याः अस्थिरमातुः

सा समाच्छाद्य तान् सर्वान् पुत्रेण सह रक्षति ।
एवं सर्वेषु सुप्तेषु प्राप्य स्वां मातरं तदा ॥११८॥
आनन्दिताहं भवामि मात्राश्लिष्टा चिरं ननु ।
पुनस्तानुत्थितान् शीघ्रमनुसंयामि चान्वहम् ॥११९॥
अस्थिरस्य सखा योऽयं प्रचाराख्यो महाबलः ।
स सर्वानस्थिरमुखान् पोषयत्यनुवासरम् ॥१२०॥
स एको बहुधा भूत्वा पुरञ्च पुरवासिनः ।
व्याप्य रक्षत्यनुदिनं सर्वान् संश्लेषयत्यपि ॥१२१॥
तं विना ते हि विश्लिष्टा नष्टाः स्युरपि सर्वथा ।
सूत्रेण हीना मणयो मालाबद्धा यथा पृथक् ॥१२२॥



या सखी श्वश्रूश्च शून्यनाम्नीअविद्या ॥ ११७ ॥ सर्वान् अस्थिरादीन् सुप्तान् । पुत्रेण मूढाख्येन सह रक्षति । आन्तरपक्षे मोहात्मिकया अविद्यया सर्वमावृतं भवतीति तात्पर्यम् ॥११८॥ आन्तरपक्षे सुषुप्तौ परिच्छेदकोपाधिलयात् पूर्णरूपतासम्पत्त्या आनन्दिता आनन्दरूपा भवामीति तात्पर्यम् । अनुसंयामि तत्तत्तादात्म्यं प्राप्नोमीत्यर्थः ॥११९॥ प्रचाराख्यः प्राणः । अस्थिरमुखान् मनःश्रोत्रादीन् । पोषयतीति । प्राणसंधितजठराग्निपाचितान्नरसमूलकसामर्थ्यवत्त्वान्मनःप्रभृतीनामिति भावः ॥ १२० ॥ सः प्राणः । बहुधा प्राणादिवृत्तिभेदेन संश्लेषयति । स्वस्वविषयैः संयोजयति ॥ १२१ ॥ मनःप्रभृतिषु क्रियाशक्तिरूपेणायमेव प्रोत इत्याह—दृष्टान्तेन । तं विनेति । विश्लिष्टाः विषयसम्बन्धाः । नष्टाः कार्याक्षमत्वेन नष्टप्रायाः । मालाकारतया बद्धाः मणयः । तेषां पृथग्भू-

स एव माञ्च सङ्क्रम्य सर्वैः संयोजयत पुरम् ।
मया संजीवितोऽत्यन्तं सूत्रधारो हि तत्पुरे ॥१२३॥
जीर्णे तु तत्पुरे चान्यत् पुरं तान्नयति द्रुतम् ।
एवं प्रचारं सश्रित्य पुराणामधिपोऽभवत् ॥ १२४ ॥
बहूनामस्थिरो नूनं विचित्राणां क्रमेण वै ।
सतीपुत्रोऽप्यस्थिरः स संश्रितोऽपि महाबलम् ॥१२५॥
मया च भावितोऽत्यन्तं सर्वथा दुःखभागभूत् ।
चपलामहाशनाभ्यां पत्नीभ्यां सुसमागमत् ॥१२६॥
ज्वालामुखीनन्यवृत्ताभयपुत्रयुगेन च ।
अन्यैः पुत्रैः पञ्चभिः स सर्वत्राभिविकर्षितः ॥१२७॥

---

तानां मालाकारता यथा नश्यतीति भावः ॥ १२२ ॥ मां सङ्क्रम्य मत्तादात्म्यं प्राप्य । सर्वैर्मां संयोजयति । अन्तःकरणादीनां चित्तादात्म्यं प्राणद्वारकमेवेति तात्पर्यम् । एतच्चाग्रे भविष्यति । सूत्रधार इति । यथा सूत्रधारो नाट्यप्रवर्त्तकः । एवं प्राण एव मनःप्रभृतिव्यापारप्रवर्त्तकः ॥ १२३ ॥ तत्पुरे । शरीरे । तान् बुद्ध्यादीन् । नयतीति । उत्क्रमणकाले बुद्ध्यादीनां प्राणे लयात् प्राणो नयतीति भावः । अधिपः अस्थिराभिधानोऽभवत् ॥ १२४ ॥ बहूनां पुराणामिति पूर्वेण सम्बन्धः । महाबलं प्राणम् ॥ १२५ ॥ त्वया महामन्त्रवत्या भावितस्य महाबलसंश्रयस्य सतीपुत्रस्यापि दुःखत्वन्तु कुत इति चेत् पत्न्यासत्समागमादित्याह—चपलेत्यादि ॥ १२६ ॥ अभिविकर्षित इति । विकल्पेन आशादयः तत इन्द्रियार्थेषु प्रवृत्तिः तन्निमित्तः क्रोधलोभोदयः तेन दुःखभागभूदित्याशयः ॥१२७॥

मन्मातरं परिष्वज्य मुहुर्मुहुरकल्मषा ॥ १४० ॥
आनन्दार्णवनिर्मग्नस्वभावाऽभवदञ्जसा ।
एवं त्वमपि दुर्वृत्तं निगृह्य सखिसम्भवम् ॥ १४१ ॥
प्राप्य स्वमातरं नाथ सुखं नित्यं समाप्नुहि ।
एतत्ते कथितं नाथ स्वानुभूतं सुखास्पदम् ॥ १४२ ॥
इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे हेमचूडोपाख्याने
बन्धाख्यायिका पञ्चमोऽध्यायः ॥

---

साधिं । प्राप्य सङ्गतेति पूर्वश्रवणेन परोक्षज्ञानमुक्तम् । इदानीं मनननिदिध्यासनाभ्यां समपरोक्षमिति वा विवेकः । मन्मातृ-पुरं । अनवच्छिन्नशुद्धचिदात्मनां उद्भूतमिति ज्ञानोत्तरक्षणे । मुहुर्मुहुर्मन्मातरं परिष्वज्येति जीवन्मुक्तिदशोक्ता ज्ञेया । मुहुर्मुहु-रिति बुद्धेर्मध्ये मध्ये द्वैताभासरूपतोक्ता । अतएवाह । अक-ल्मषेति । दग्धपटाकारस्थद्वैताभासस्य न पूर्ववत् संसारमूलवा-सनात्मककल्मषाधायकत्वमिति भावः । एतदेवोक्तं । हत्वापि स इमान् लोकान् न हन्ति न निबध्यते इति ॥ १४० ॥ ननु संसारमूलवासनाभावेऽपि दृष्टदुःखं स्यादित्याशङ्क्याह । आन-न्देति । वासनाहेतोरभिमानस्यैव दुःखहेतुत्वादिति तात्पर्यम् । अभवदिति प्रथमपुरुषेण बुद्धेरेवंविधमोक्षो न ममेत्युक्तं भव-ति । सखिसम्भवं मनः ॥ १४१ ॥ प्राप्येति । बुद्ध्या महापरि-च्छिन्नचिदेकरूपतां प्राप्येत्यर्थः ॥ १४२ ॥
इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे व्याख्यायां तात्पर्य-
दीपिकायां पञ्चमोऽध्यायः ॥

---

# अथ षष्ठोऽध्याय ।

एवं प्रियावचः श्रुत्वा हेमचूडाऽतिविस्मितः ।
हसन् पप्रच्छ तां कान्तामविद्वान् विदुषीं तदा ॥ १ ॥
प्रिये प्रोक्तं यदेतत्ते खचित्रमिव भाति मे ।
निरालम्बं जानाम्येतदशेषतः ॥ २ ॥
नूनं तदप्सरोद्भूता ऋषिणा वर्द्धिता वने ।
संसृष्टयौवनाप्यापि न तारुण्यमलङ्कृता ॥ ३ ॥
वक्ष्यस्यनेकसाहस्रवर्षाणामिव संस्थितिम् ।
भूतप्रसक्तोक्तिसदृशवचसा तेऽतिमात्रतः ॥ ४ ॥
असन्दर्भेण किमहं विबुद्ध्यामि यथार्थतः ।
वदते सा सखी क्वास्ते क्वश्च सखि पुत्रकः ॥ ५ ॥
पुराणि तानि वा कुत्र संस्थितानि तदीरय ।
अस्तु किं तेन वृत्तेन वद मे क च सा सखी ॥ ६ ॥
सखीं न प्राप्तवान् मातुरहं तत प्रतिचारय ।

---

अत्राध्याये चेतिपद्यैः श्रद्धाश्रेयः सुसाधनम् ।
कुतर्कस्यानर्थलाभ इति सम्यक् निरूप्यते ॥ १ ॥

खचित्रमिव । असम्भावितमिवेत्यर्थः । निरालम्बं निर्विषयं ॥ २ ॥ कुत इति चेदाह । नूनमिति । अलं । असन्तं ॥ ३ ॥ अतिमात्रतोऽतिमात्रेण बहुलेन वचसा ॥ ४ ॥ कुतो मद्वचस्थसन्दर्भतेति चेदाह । वदेति ॥ ५ ॥ ६ ॥ अहं मात्रा दत्तां सखीं न प्राप्तवानस्मि । मे आर्या माता अवरोधेऽन्तःपुरेऽस्ति

आर्यास्ति मेऽवरोधे स्वे पितुर्मेऽन्या नहि प्रिया ॥ ७ ॥
सा वा सखी मे कुत्रास्ते तत्पुत्रो वा वद द्रुतम् ।
मन्येऽहं ते वचो लोके वन्ध्यापुत्रसमाश्रयम् ॥ ८ ॥
यथाह कश्चिन्नटीको विदूषकवचोविधौ ।
वन्ध्यापुत्रः समारूढः प्रतिबिम्बमहारथम् ॥ ९ ॥
शुक्त्यारोपितहैरण्यभूषणैर्भूषिताङ्गकः ।
आयुधैर्नरशृङ्गोत्थैर्युद्ध्वा गगनकानने ॥ १० ॥
हत्वा भविष्यद्राजानं जित्वा गन्धर्वपत्तनम् ।
मरीचिस्रोतसि स्वामकामिनीभिर्हि खेलति ॥ ११ ॥
तथा तव वचो मन्ये सर्वथाऽसङ्गतं ननु ॥
श्रुत्वैवं प्रियवाक्यं सा चतुरा प्राह तं पुनः ॥ १२ ॥
नाथ प्रोक्तं मया यत्ते तत कथं स्यादपार्थकम् ।
न मादृशानां वचनं निरालम्बं क्वचिद्भवेत् ॥ १३ ॥
मृषा हि तपसां हन्त्री सत्यशीलेषु सा कुतः ।
तपस्विनां कुले कस्माच्छ्रिवत्रे सौन्दर्यवद्भवेत् ॥ १४ ॥

---

तां विचारय पृच्छ । अन्यापि माता मे नास्ति यथा सखीद्-त्वास्था स्यादित्याह । पितुरिति ॥७॥ लोके प्रसिद्धं वन्ध्यापुत्रसमाश्रयं वच इव ते वचः ॥ ८ ॥ तदेवाह । यथेति । नटिको नटः ॥ ९ ॥ १० ॥ ११ ॥ तथा । प्रोक्तविदूषकवाक्यवत् । असङ्गतं ॥ १२ १३ ॥ कुतस्ते वचो मृषा नेति चेदाह । मृषेति । तपस्विनां मध्ये विशेषतः सत्यशीलेष्वस्मासु सा असम्भाव्यैवेति सदृष्टान्तमाह । तपस्विनामिति ॥ १४ ॥

यो योयजति जिज्ञासुमन्यार्थे नश्यसत्यतः ।
तस्य नोर्द्ध्वं न चाधस्ताल्लोकेऽस्ति सुखसाधनम् ॥१५॥
शृणु राजसुतोक्तिं मे लोके तैमिरिकः क्वचित् ।
समदृष्टिं नैति शीघ्रमञ्जनानां वचोगणैः ॥ १६ ॥
असत्यमेव जानाति हितप्रोक्तं च मूढधीः ॥
तत्त्वं प्रियाहं जिज्ञासुमसत्यैर्योजयामि किम् ॥ १७ ॥
अप्यसत्यं मयोक्तं यत्तद्विमर्शय सिद्धया ।
लोके हि कुशलो मर्त्यः सर्वव्यवहृतौ ननु ॥ १८ ॥
परीक्ष्यैकांशतः सर्वामभिजानाति संस्थितिम् ।
निदर्शनं प्रदास्यामि तुभ्यमत्र समीक्षया ॥ १९ ॥

---

जिज्ञासुविषये असत्येन वचसा पुण्यलोकनाश इत्याह । च इति । अन्यार्थेन अयथार्थवचसा असत्यात् न लोकः ॥ १५ ॥ मदुक्तं सकृच्छ्रवणमात्रेण त्वया मूढेन ज्ञातुमशक्यमित्याशयेनाह । शृण्विति ॥ १६ ॥ हितेन प्रियेण प्रोक्तमपि मूढधीरसत्यमिति जानाति । तत् । तस्मात् । त्वयैवं यद्विज्ञातं तदनुचितमेव । यदहं तपस्विनी सत्यशीला तव प्रिया च भूत्वा जिज्ञासुः असत्यैर्योजयामि किं । नियोजयाम्येवेत्यर्थः ॥ १७ ॥ ननु असत्यं साहसं क्रौर्यं स्त्रीणां सहजसम्भवमिति चेत्त्वं कुशलोऽभिज्ञातुमत एतत् परीक्षस्वेत्याह—अपीति । सिद्धया । सूक्ष्मतर्कयुक्तबुद्ध्या । नन्वहं कुशलोऽप्यतीतार्थं त्वद्वचनं कथं परीक्षिष्यामीति चेदाह । लोक इति ॥ १८ ॥ लोके सत्यशीलसंस्थितिं एवांशतः क्वचिद्व्यवहारे परीक्ष्यैव जानाति । अतो मया प्रागुक्तं यत्त्वया सत्येत्वनानुभूतमिति दर्शनं प्रदा-

यः पुरा विषयः सर्वो बभूवाभीष्टसाधनम् ।
धिरान्मद्वचनात् सोऽद्य कुतो न सुखसाधनम् ॥२०॥
स एवाद्य साधयति सुखमन्येषु वै कुतः ।
एतन्निदर्शनेनैव स्वमतं वक्तुमर्हसि ॥ २१ ॥
शृणु राजन् यद्ब्रवीम्यृज्व्या निर्मलया धिया ।
अनाश्वासो रिपुर्लोके भवेदाप्तोक्तिषु स्थिरः ॥ २२ ॥
श्रद्धा माता प्रपन्नं सं वत्सलेव सुतं सदा ।
रक्षति प्रौढभीतिभ्यः सर्वथा नाहि संशयः ॥ २३ ॥
आप्तेष्वश्रद्धतं मूढं जहाति श्रीः सुखं यशः ।
स भवेत सर्वतो हीनो यः श्रद्धारहितो नरः ॥ २४ ॥
श्रद्धा हि जगतां धात्री श्रद्धा सर्वस्य जीवनम् ।
अश्रद्धो मातृविषये बालो जीवेत कथं वद ॥ २५ ॥

---

स्यामि अनुभूतं स्मारयामि । अत्र मद्वचनपरीक्षायां ॥ १९ ॥ य इति । यो विषयः पुरा सुखसाधनतया गृहीतः सोद्य मद्वचसान्यथैवानुभूयते । एवं प्रागुक्तस्य सत्यत्वादिदमपि सत्यं भवेदेवेति जानीहीति भावः ॥ २० ॥ ननु कालभेदान्न स विषयः सुखसाधनं मत्तो नैतस्त्ववचनकृतमिति चेदाह स एवेति । एतन्निदर्शनेनमदुक्तानुभवेन । स्वमतं । मदुक्तमसत्यमिति निश्चयं । प्रमाणमप्रमाणं वेति वक्तुं ॥ २१ ॥ मद्वचने श्रद्धस्वेति वाक्येतु श्रद्धां स्तौति । शृण्वित्यादि । ऋज्व्या कुतर्करहितया । अतएव निर्मलया । युत इति शेषः । अनाश्वासः अश्रद्धा ॥ २२ ॥ २३ अतएव सर्वतो हीनो भवेत् ॥ २४ ॥ अश्रद्ध इति माता मे हीनमेव कुर्यादिति श्रद्धाभावे तद्दत्ताहारादेः त्याज्यत्वेन बालो न जीविष्यतीति भावः ॥ २५ ॥

# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS:

Edited by
GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvalī Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Edited with Introduction and Index by Gopināth Kavirāj, M.A.

No. 2—The Advaita Chintāmaṇi, by Raṅgoji Bhaṭṭa, Ed. with Introduction etc. by Nārâyaṇa S'āstrī Khiste Sāhityāchārya.

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.
Ed. with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya.

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.
Ed. with Introduction etc. by Gopinath Kaviraj, M. A.

No. 5—The Rasasāra, a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M. A.

No. 6 (Part I)–The Bhavanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by Mm. Gaṅgānātha Jhā, M.A., D. Litt.

No. 6 (Part II)—Ditto Ditto

No. 7 (Part I)–Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A

No. 7- (Part II) Ditto Ditto

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra.
Ed. with Introduction etc. by Jagannātha S'āstrī Hoshing Sāhityopādhyāya.

No. 9 (Part I)–The Bhakti Chandrikā, a Commentary on S'āṇḍilya's Bhaktistūras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.

No. 10( PartI)–The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A.

No. 11–The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by S'aṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya.

No. 12–The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'astrī Khiste Sāhityāchārya.

No. 13–The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed. with Introduction by Gopinath Kaviraj, M. A.

No. 14–The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jaganātha S'āstrī Hoshing Sāhityopādhyāya.

No. 15 (Part 1)–The Tripurārahasya.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.

No. 16–The Kāvya Vilāsa, by Chiranjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M.A. and Jagannātha S'āstrī Hoshing Sāhityopādhyāya.

No. 17–The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by Mm. Gaṅgānātha Jhā, M.A., D.Litt.

No. 18 (Part I)–The Gorakṣa siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.

THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by
GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1): its evolution, by Gaṅgā nātha Jhā.
(b) The View point of Nyāya Vaiśeṣika Philosophy, by Gopi nath Kaviraj.
(c) Nīrmāṇa *Kāya*, by Gopinath Kaviraj.

Vol. II—

(a) Paraśurāma Miśra ALIAS Vāṇī Rasāla Rāya, by Gopinath Kaviraj.
(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.
(c) Studies in Hindu Law (2):–its sources, by Gaṅgānātha Jha.
(d) A New Bhakti Sūtra, by Gopinath Kaviraj.
(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.
(f Theism in Ancient India, by Gopinath Kaviraj.
(g) Hindu Poetics, by Baṭuka nātha S'arma.
(h) A seventeenth Century Astrolabe, by Padmākara Dvivedi.
(i) Some aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj.
(j) Nyāya Kusumāñjali ( English Translation ), by Gopinath Kaviraj.
(k) The Definition of Poetry, by Nārāyaṇa S'āstrī Khiste.
(l) Sondala Upādhyāya, by Gopinath Kaviraj.

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G.A. Jacob.
(b) Studies in Hindu Law (3) Judicial Procedure: by Gaṅgā nātha Jha.
(c) Theism in Ancient India, by Gopinath Kaviraj.
(d) History and Bibliogpraphy of Nyāya V'iśeṣika Literature, by Gopinath Kaviraj.
(e) Naiṣadha and S'rī Harṣa, by Nīlakamala Bhaṭṭāchārya.
(f) Indian Dramaturgy, by P. N. Pātankar.

Vol. IV—(In progress)—

(a) Studies in Hindu Law. (4) Judicial Procedure: by Gaṅgā-natha Jhā.
(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.
(c) Analysis of the Contents of the ṚgVeda Prātiśākhya, by Maṅgala Deva Sāstrī.
(d) Nārāyaṇa's Gaṇitā kaumudī, by Padmākara Dvivedi.
(e) Food and Drink in the Rāmāyanic Age, by Manmatha nātha Roy.
(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj.

To be had of—

The Superintendent, Government Press,
Allahabad, U.P. (India).